श्रीहरिभद्रसूरिकृतग्रंथमाला।

( शास्त्रवार्त्तासमुच्चय, षड्दर्शनसमुच्चय, अष्टक )

श्री भावनगरनिवासी संघवी दामोदरदास नेमचंद

( श्रीजैनधर्मप्रसारक सभाना खजानची )

तरफनी सहायथी

छपावी प्रसिद्ध करनार.

श्रीजैनधर्मप्रसारक सभा,

भावनगर.

विक्रम संवत् १९६४. वीर संवत् २४३४.

## खास सूचना.

आ ग्रंथ संस्कृतना अभ्यासी दरेक साधु साध्वीने तेमज दरेक पुस्तक भंडारने भेट आपवाना छे माटे तेना इच्छक साधु मुनिराजे तेमज पुस्तक भंडारना व्यवस्थापकोए मंगावी लेवा कृपा करवी. जैन लाइब्रेरीवालाओए पोस्टेज एक आनो मोकलीने मंगाववो.

गीरधरलाल देवचंद.

श्रीजैनधर्मप्रसारक सभाना,

जो० सेक्रेटरी.

# प्रस्तावना.

आ ग्रंथमालानुं नाम 'श्रीहरिभद्रसूरिकृत ग्रंथमाला' राखवामां आव्युं छे. ए महान् ग्रंथकर्त्ताए १४४४ ग्रंथो रच्येला छे. परंतु तेमांथी घणु थोडी संख्यामां लभ्य थइ शके छे. जे ग्रंथो मळी शके छे तेमांथी मात्र ३ ग्रंथोज आ संग्रहमां दाखल करवामां आव्या छे परंतु ते त्रणे ग्रंथो अपूर्व रहस्यथी भरेला छे. प्रथमना शास्त्रवार्त्तासमुच्चय ग्रंथनी उपर बे टीकाओ ( लघु अने बृहत् ) छे. षड्दर्शनसमुच्चयनी उपर पण तेज प्रमाणे बे टीकाओ छे जेमांनी लघु टीका बनारसमां छपायेली छे अने मोटी टीका कलकत्तामां छपाय छे जेनो एक अंक बहार पडेलो छे. अष्टक ३२ छे एटले तेमां जुदा जुदा ३२ विषय उपर कुल २५६ श्लोक छे. तेनी उपर श्रीजिनेश्वरसूरिनी करेली टीका छे. तेनो अर्थ मूळ साथे छपायेल छे. टीका छपायेल नथी. आ त्रण ग्रंथोमां पृथक् पृथक् विषय चर्चीने जिन प्रवचननुं तमाम रहस्य समावेलुं छे. जोके ए त्रणे ग्रंथो सटीक छपाववा योग्य छे अने ते प्रमाणे छपावाथी बहु लाभ करे तेवुं छे परंतु तेनुं एकंदर प्रमाण वधारे थवाथी तेमज तेने शुद्ध करी आपवाना संबंधमां मुनि महाराजनी खास जरूर पडे तेम होवाथी एकाएक बहार पाडी शकाय तेवुं नथी. तेथी ए ग्रंथोनी महत्वतानुं दिग्दर्शन करावी तेने सटीक छपाववा आपणा उदार तेमज विद्वान् जैन बंधुओनुं दिल आकर्षवा माटे स्वल्प खर्चथी आ प्रयत्न करवामां आव्यो छे. एटलुंज नहीं परंतु संस्कृत भाषाना

प्रस्ता- बोधवाला मुनि महाराज विगेरेने पठन पाठन माटे आ ग्रंथ खास उपयोगी होवाथी आ उद्योगनी साफल्यता मानवामा आवी छे.

अनेक गुणगणसंपन्न पन्यास श्री आनंदसागरजीनुं भावनगरमां चातुर्मास थतां जुदा जुदा गृहस्थो तरफथी अन्य अन्य ग्रंथो अमुक खर्चथी छपावीने प्रगट करवानो तेओ साहेबे प्रयास आरंभ्यो, आ सभाने ते काम सोंपवामां आव्युं अने तेनी प्रेसकॉपी तपासी आपवानुं तेउ साहेबे स्वीकार्युं, जेथी तेना प्रथम गुच्छ तरीके आ ग्रंथमाला अमारी सभाना खजानची संघवी दामोदरदास नेमचंद तरफथी मळेली मददने अंगे तैयार करावी, तेउ साहेब पासे पसार करावी छपाववामां आवेल छे. तेने शुद्ध करवामाटे बनतो प्रयास करवामां आव्यो छे छतां कांइ पण अशुद्धता रही गइ होय तो तेने माटे क्षमा इच्छीए छीये.

संवत १९६४ }
कार्तिक }

श्रीजैनधर्मप्रसारकसभा,
भावनगर.

# अथ श्रीहरिभद्रसूरिविरचितः

## शास्त्रवार्तासमुच्चयः

### प्रारभ्यते

### ॥ अथ प्रथमः स्तवकः ॥

प्रणम्य परमात्मानं वक्ष्यामि हितकाम्यया । सत्त्वानामल्पबुद्धीनां शास्त्रवार्तासमुच्चयम् ॥ १ ॥ यं श्रुत्वा सर्वशास्त्रेषु प्रायस्तत्त्वविनिश्चयः । जायते द्वेषशमनः स्वर्गसिद्धिसुखावहः ॥ २ ॥ दुःखं पापात्सुखं धर्मात्सर्वशास्त्रेषु संस्थितिः । न कर्तव्यमतः पापं कर्तव्यो धर्मसंचयः ॥ ३ ॥ हिंसानृतादयः पंच तत्त्वाश्रद्धानमेव च । क्रोधादयश्च चत्वार इति पापस्य हेतवः ॥ ४ ॥ विपरीतास्तु धर्मस्य एत एवोदिता बुधैः । एतेषु सततं यत्नः सम्यक्कार्यः सुखैषिणा ॥ ५ ॥ साधुसेवा सदा भक्त्या मैत्री सत्त्वेषु भावतः । आत्मीयग्रहमोक्षश्च धर्महेतुप्रसाधनम् ॥ ६ ॥ उपदेशः शुभो नित्यं दर्शनं धर्मचारिणाम् । स्थाने विनय इत्येतत्साधुसेवाफलं महत् ॥ ७ ॥ मैत्रीं भावयतो नित्यं शुभो भावः प्रजायते । ततो भावोदकाज्जंतोर्द्वेषाग्निरुपशाम्यति ॥ ८ ॥ अशेषदोषजननी निःशेषगुणघातिनी । आत्मीयग्रहमोक्षेण तृष्णापि विनिवर्तते ॥ ९ ॥ एवं गुणगणोपेतो

विशुद्धात्मा स्थिराशयः। तत्त्वविद्भिः समाख्यातः सम्यग्धर्मस्य साधकः ॥ १० ॥ उपादेयश्च संसारे धर्म एव बुधैः सदा।
विशुद्धो मुक्तये सर्वं यतोऽन्यद्दुःखकारणम् ॥ ११ ॥ अनित्यः प्रियसंयोग इहेर्ष्याशोकवत्सलः। अनित्यं यौवनं चापि कु-
त्सिताचरणास्पदम् ॥ १२ ॥ अनित्याः संपदस्तीव्रक्लेशवर्गसमुद्भवाः। अनित्यं जीवितं चेह सर्वभावनिबंधनम् ॥ १३ ॥
पुनर्जन्म पुनर्मृत्युर्हीनादिस्थानसंश्रयः। पुनः पुनश्च यदतः सुखमत्र न विद्यते ॥ १४ ॥ प्रकृत्यसुंदरं ह्येवं संसारे सर्वमेव
यत्। अतोऽत्र वद किं युक्ता क्वचिदास्था विवेकिनाम् ॥ १५ ॥ मुक्त्वा धर्मं जगद्वंद्यमकलंकं सनातनम्। परार्थसाधकं
धीरैः सेवितं शीलशालिभिः ॥ १६ ॥ युग्मम् ॥ आह तत्रापि नो युक्ता यदि सम्यङ्निरूप्यते। धर्मस्यापि शुभो
यस्माद्बंध एव फलं मतम् ॥ १७ ॥ न चायसस्य बन्धस्य तथा हेममयस्य च। फले कश्चिद्विशेषोऽस्ति पारतंत्र्याविशेषतः
॥ १८ ॥ तस्मादधर्मवत्त्याज्यो धर्मोऽप्येवं मुमुक्षुभिः। धर्माधर्मक्षयान्मुक्तिर्मुनिभिर्वर्णिता यतः ॥ १९ ॥ उच्यत एवमेवै-
तत् किं तु धर्मो द्विधा मतः। संज्ञानयोग एवैकस्तथान्यः पुण्यलक्षणः ॥ २० ॥ ज्ञानयोगस्तपः शुद्धमाशंसादोषवर्जितम्।
अभ्यासातिशयादुक्तं तद्विमुक्तेः प्रसाधकम् ॥ २१ ॥ धर्मस्तदपि चेत्सत्यं किं न बन्धफलः स यत्। आशंसावर्जितोऽन्यो-
ऽपि किं नैवं चेन्न यत्तथा ॥ २२ ॥ भोगमुक्तिफलो धर्मः स प्रवृत्तीतरात्मकः। सम्यङ्मिथ्यादिरूपश्च गीतस्तंत्रांतरेष्वपि ॥
॥ २३ ॥ तमन्तरेण तु तयोः क्षयः केन प्रसाध्यते। सदा स्यान्न कदाचिद्वा यद्यहेतुक एव सः ॥ २४ ॥ तस्मादवश्यमेष्ट-
व्यः कश्चिद्धेतुस्तयोः क्षये। स एव धर्मो विज्ञेयः शुद्धो मुक्तिफलप्रदः ॥ २५ ॥ धर्माधर्मक्षयान्मुक्तिर्यच्चोक्तं मुक्तिलक्षणम्।
हेयं धर्मं तदाश्रित्य न तु संज्ञानयोगकम् ॥ २६ ॥ अतस्तत्रैव युक्तास्था यदि सम्यङ्निरूप्यते। संसारे सर्वमेवान्यद्दर्शितं

दुःखकारणम् ॥ २७ ॥ तस्माद्य जायते मुक्तिर्यथा मृत्यादिवर्जिता । तथोपरिष्टाद्वक्ष्यामः सम्यक्छास्त्रानुसारतः ॥ २८ ॥ इदानीं तु समासेन शास्त्रसम्यक्त्वमुच्यते । कुवादियुक्त्यपव्याख्यानिरासेनाविरोधतः ॥ २९ ॥ पृथिव्यादिमहाभूतमात्रकार्यमिदं जगत् । न चात्मादृष्टसद्भावं मन्यंते भूतवादिनः ॥ ३० ॥ अचेतनानि भूतानि न तद्धर्मो न तत्फलम् । चेतनास्ति च यस्येयं स एवात्मेति चापरे ॥ ३१ ॥ यदीयं भूतधर्मः स्यात्प्रत्येकं तेषु सर्वदा । उपलभ्येत सत्त्वादिकठिनत्वादयो यथा ॥ ३२ ॥ शक्तिरूपेण सा तेषु सदाऽतो नोपलभ्यते । न च तेनापि रूपेण सत्यसत्येव चेन्न तत् ॥ ३३ ॥ शक्तिचेतनयोरैक्यं नानात्वं वाथ सर्वथा । ऐक्ये सा चेतनैवेति नानात्वेऽन्यस्य सा यतः ॥ ३४ ॥ अनभिव्यक्तिरप्यस्या न्यायतो नोपपद्यते । आवृतिर्न यदन्येन तत्त्वसंख्याविरोधतः ॥ ३५ ॥ न चासौ तत्स्वरूपेण तेषामन्यतरेण वा । व्यंजकत्वप्रतिज्ञानान्नावृतिर्व्यंजकं यतः ॥ ३६ ॥ विशिष्टपरिणामाभावेऽपि ह्यत्रावृतिर्न वै । भावतासेस्तथा नाम व्यंजकत्वप्रसंगतः ॥ ३७ ॥ न चासौ भूताभिन्नो यत्ततो व्यक्तिः सदा भवेत् । भेदे त्वधिकभावेन तत्त्वसंख्या न युज्यते ॥ ३८ ॥ स्वकालेऽभिन्न इत्येवं कालाभावे न संगतम् । लोकसिद्धाश्रये त्वात्मा हंत नाश्रीयते कथम् ॥ ३९ ॥ नात्मापि लोके नो सिद्धो जातिस्मरणसंश्रयात् । सर्वेषां तदभावश्च चित्रकर्मविपाकतः ॥ ४० ॥ लोकेऽपि नैकतः स्थानादागतानां तथेक्ष्यते । अविशेषेण सर्वेषामनुभूतार्थसंस्मृतिः ॥ ४१ ॥ दिव्यदर्शनतश्चैव तद्विशिष्टव्यभिचारतः । पितृकर्मादिसिद्धेश्च हंत नात्माप्यलौकिकः ॥ ४२ ॥ काठिन्याबोधरूपाणि भूतान्यध्यक्षसिद्धितः । चेतना तु न तद्रूपा सा कथं तत्फलं भवेत् ॥ ४३ ॥ प्रत्येकमसती तेषु न च स्याद्रेणुतैलवत् । सती चेदुपलभ्येत भिन्नरूपेषु सर्वदा ॥ ४४ ॥ असत्स्थूलत्वमण्वादौ घटादौ दृश्यते यथा । तथा सत्येव भूतेषु

चेतनापीति चेन्मतिः ॥ ४५ ॥ नासत्स्थूलत्वमण्वादौ तेभ्य एव तदुद्भवात् । असतस्तत्समुत्पादो न युक्तोऽतिप्रसंगतः॥४६॥ पंचमस्यापि भूतस्य तेभ्योऽसत्त्वाविशेषतः । भवेदुत्पत्तिरेवं च तत्त्वसंख्या न युज्यते ॥ ४७ ॥ तथानेकस्वभावा नेत्यत्र मानं न विद्यते । स्थूलत्वोत्पाद इष्टश्चेत्तत्सद्भावेऽप्यसौ समः ॥ ४८ ॥ न च मूर्त्ताणुसंघातभिन्नं स्थूलत्वमित्यदः । तेषामेव तथा भावो न्याय्यं मानाविरोधतः॥ ४९ ॥ भेदे तदददं यस्मात् कथं सद्भावमश्नुते । तदभावेऽपि तद्भावे सदा सर्वत्र वा भवेत् ॥ ५० ॥ न चैवं भूतसंघातमात्रं चैतन्यमिष्यते । अविशेषेण सर्वत्र तद्वत्तद्भावसंगतेः ॥ ५१ ॥ एवं सति घटादीनां व्यक्तचैतन्यभावतः । पुं[1]रुपाद्यविशेषः स्यात् स च प्रत्यक्षबाधितः ॥ ५२ ॥ अथ भिन्नस्वभावानि भूतान्येव यतस्ततः । तत्संघातेषु चैतन्यं न सर्वेष्वेतदप्यसत् ॥ ५३ ॥ स्वभावो भूतमात्रत्वे सति न्यायान्न भिद्यते । विशेषणं विना यस्मान्न तुल्यानां विशिष्टता ॥ ५४ ॥ स्वरूपमात्रभेदे च भेदो भूतेतरात्मकः । अन्यभेदकभावे तु स एवात्मा प्रसज्यते ॥ ५५ ॥ हविर्गुरुकणिकादिद्रव्यसंघातजान्यपि । यथा भिन्नस्वभावानि खाद्यकानि तथेति चेत् ॥ ५६ ॥ व्यक्तिमात्रत एवैषां न तु भिन्नस्वभावता । रसवीर्यविपाकादिकार्यभेदो न विद्यते ॥ ५७ ॥ तदात्मकत्वमात्रत्वे संस्थानादिविलक्षणा । यथेयमस्ति भूतानां तथा सापि कथं न चेत् ॥ ५८ ॥ कर्त्रभावात्तथा देशकालभेदाद्ययोगतः । न वा सिद्धमदो भूतमात्रत्वे तदसंभवात्॥५९॥ तथा च भूतमात्रत्वे न तत्संघातभेदयोः । भेदकाभावतो भेदो युक्तः सम्यग्विचिंत्यताम् ॥६०॥ एकस्तथा परो नेति तन्मात्रत्वे तथाविधः । यतस्तदपि नो भिन्नं ततस्तुल्यं च तत्तयोः ॥ ६१ ॥ स्यादेतद्भूतजत्वेऽपि ग्रावादीनां विचित्रता । लोक-

१ पुरुषान्न विशेषः इति वा पाठः ।

सिद्धेति सिद्धैव न सा तन्मात्रजा न नु ॥ ६२ ॥ अदृष्टाकाशकालादिसामग्रीतः समुद्भवात् । तथैव लोकसंवित्तेरन्यथा तदभावतः ॥ ६३ ॥ न चेह लौकिको मार्गः स्थितोऽस्माभिर्विचार्यते । किं त्वयं युज्यते केति त्वन्नीतौ चोक्तवन्न सः॥६४॥ मृतदेहे च चैतन्यमुपलभ्येत सर्वथा । देहधर्मादिभावेन तन्न धर्मादि नान्यथा ॥ ६५ ॥ न च लावण्यकार्कश्यश्यामत्वैर्व्यभिचारिता । मृतदेहेऽपि सद्भावादध्यक्षेणैव संगतेः ॥ ६६ ॥ न चेष्टावाय्वसद्भावो न स तन्मात्रहेतुकः । अत एवान्यसद्भावादस्त्यात्मेति व्यवस्थितम् ॥ ६७ ॥ न प्राणादिरसौ मानं किं तद्भावेऽपि तुल्यता । तदभावादभावश्चेदात्माभावे न का प्रमा ॥ ६८ ॥ तेन तद्भावभावित्वं न भूयो नलिकादिना । संपादितेऽप्यतत्सिद्धेः सोऽन्य एवेति चेन्न तत् ॥ ६९ ॥ वायुसामान्यसंसिद्धेस्तत्स्वभावः स नेति चेत् । अत्रापि न प्रमाणं यश्चैतन्योत्पत्तिरेव चेत् ॥ ७० ॥ न तस्यामेव संदेहात्तथायं केन नेति चेत् । तत्तत्स्वरूपभावेन तदभावः कथं नु चेत् ॥ ७१ ॥ तद्वैलक्षण्यसंवित्तेर्मातृचैतन्यजे ह्ययम् । सुते तस्मिन्न दोषः स्यान्न भावेऽस्य मातरि ॥ ७२ ॥ न च संस्वेदजादेषु मात्रभावे न तद्भवेत् । प्रदीपज्ञातमप्यत्र निमित्तत्वान्न बाधकम् ॥ ७३ ॥ इत्थं न तदुपादानं युज्यते तत्कथंचन । अन्योपादानभावे च तदेवात्मा प्रसज्यते ॥ ७४ ॥ न तथा भाविनं हेतुमंतरेणोपजायते । किंचिन्नश्यति चैकांतादयथाह व्यासमहर्षिः ॥ ७५ ॥ नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥ ७६ ॥ नाभावो भावमाप्नोति शशशृंगे तथागतेः । भावो नाभावमेतीह दीपश्चेन्न स सर्वथा ॥ ७७ ॥ एवं चैतन्यवानात्मा सिद्धः सततभावतः । परलोक्यपि विज्ञेयो युक्तिमार्गानुसारिभिः ॥ ७८ ॥

---

१ छंदःप्रतिलोमतात्रार्षत्वान्न दोषायेति स्याद्वादकल्पलता एवमन्यत्रापि ।

सतोऽस्य किं घटस्येव प्रत्यक्षेण न दर्शनम् । अस्त्येव दर्शनं स्पष्टमहंप्रत्ययवेदनात् ॥ ७९ ॥ भ्रांतोऽहं गुरुरित्येष सत्यमन्यस्त्वसौ मतः । व्यभिचारित्वतो नास्य गमकत्वमथोच्यते ॥ ८० ॥ प्रत्यक्षस्यापि तत्त्याज्यं तत्सद्भावाविशेषतः । प्रत्यक्षाभासमन्यच्चेद्व्यभिचारि न साधु तत् ॥ ८१ ॥ अहंप्रत्ययपक्षेऽपि ननु सर्वमिदं समम् । अतस्तद्वदसौ मुख्यः सम्यक् प्रत्यक्षमिष्यताम् ॥ ८२ ॥ गुर्वी मे तनुरित्यादौ भेदप्रत्ययदर्शनात् । भ्रांतताभिमतस्यैव सा युक्ता नेतरस्य तु ॥ ८३ ॥ आत्मनात्मग्रहोऽप्यत्र तथानुभवसिद्धितः । तस्यैव तत्स्वभावत्वान्न तु युक्त्या न युज्यते ॥ ८४ ॥ न च बुद्धिविशेषोऽयमहंकारः प्रकल्प्यते । दानादिबुद्धिकालेऽपि तथाहंकारवेदनात् ॥ ८५ ॥ आत्मनात्मग्रहे तस्य तत्स्वभावत्वयोगतः । सदैवाग्रहणं ह्येवं विज्ञेयं कर्मदोषतः ॥ ८६ ॥ अतः प्रत्यक्षसंसिद्धः सर्वप्राणभृतामयम् । स्वयंज्योतिः सदैवात्मा तथा वेदेऽपि पठ्यते ॥ ८७ ॥ अत्रापि वर्णयंत्येके सौगताः कृतबुद्धयः । क्लिष्टं मनोऽस्ति यन्नित्यं तद्यथोक्तात्मलक्षणम् ॥ ८८ ॥ यदि नित्यं तदात्मैव संज्ञाभेदोऽत्र केवलम् । अथानित्यं ततश्चेदं न यथोक्तात्मलक्षणम् ॥ ८९ ॥ यः कर्ता कर्मभेदानां भोक्ता कर्मफलस्य च । संसर्ता परिनिर्वाता स ह्यात्मा नान्यलक्षणः ॥ ९० ॥ आत्मत्वेनाविशिष्टस्य वैचित्र्यं तस्य यद्वशात् । नरादिरूपं तच्चित्रमदृष्टं कर्मसंज्ञितम् ॥ ९१ ॥ तथा तुल्येऽपि चारंभे सदुपायेऽपि यो नृणाम् । फलभेदः स युक्तो न युक्त्या हेत्वन्तरं विना ॥ ९२ ॥ तस्मादवश्यमेष्टव्यमत्र हेत्वन्तरं परैः । तदेवादृष्टमित्याहुरन्ये शास्त्रकृतश्रमाः ॥ ९३ ॥ भूतानां तत्स्वभावत्वादयमित्यप्यनुत्तरम् । न भूतात्मक एवात्मेत्येतदत्र निदर्शितम् ॥ ९४ ॥ कर्मणो भौतिकत्वेन यद्वैतदपि

सांप्रतम् । आत्मनो व्यतिरिक्तं तच्चित्रभाग्यं यतो मतम् ॥ ९५ ॥ शक्तिरूपं तदन्ये तु सूरयः संप्रचक्षते । अन्ये तु वास
नारूपं विचित्रफलदं तथा ॥ ९६ ॥ अन्ये त्वभिदधत्यत्र स्वरूपनियतस्य वै । कर्तुर्विनान्यसंबंधं शक्तिराकस्मिकी कुतः
॥ ९७ ॥ तत्क्रियायोगतः सा चेत्तदपुष्टौ न युज्यते । तदन्ययोगाभावे च पुष्टिरस्य कथं भवेत् ॥ ९८ ॥ अस्त्येव सा
सदा किं तु क्रियया व्यज्यते परम् । आत्ममात्रस्थिताया न तस्या व्यक्तिः कदाचन ॥ ९९ ॥ तदन्यावरणाभावाद्भावे चास्यै-
व कर्मता । तन्निराकरणाद्व्यक्तिरिति तद्भेदसंस्थितिः ॥ १००॥ पापं तद्भिन्नमेवास्तु क्रियांतरनिबंधनम् । एवमिष्टक्रियाजन्यं
पुण्यं किमिति नेष्यते ॥ १०१ ॥ वासनाप्यन्यसंबंधं विना नैवोपपद्यते । पुष्पादिगन्धवैकल्ये तिलादौ नेक्ष्यते यतः ॥१०२॥
बोधमात्रातिरिक्तं तद्वासकं किंचिदिष्यताम् । मुख्यं तदेव चः कर्म न युक्ता वासनान्यथा ॥ १०३ ॥ बोधमात्रस्य तद्भावे
नास्ति ज्ञानमवासितम् । ततो मुक्तिः सदैव स्याद्वैशिष्ट्यं केवलस्य न ॥ १०४ ॥ एवं शक्त्यादिपक्षोऽयं घटते नोपपत्तितः ।
बन्धान्न्यूनातिरिक्तत्वे तद्भावानुपपत्तितः ॥ १०५ ॥ तस्मात्तदात्मनो भिन्नं सचित्रं चात्मयोगि च । अदृष्टमवगंतव्यं तस्य
शक्त्यादिसाधकम् ॥ १०६ ॥ अदृष्टं कर्म संस्काराः पुण्यापुण्ये शुभाशुभे । धर्माधर्मौ तथा पाशः पर्यायास्तस्य कीर्तिताः ॥
॥ १०७ ॥ हेतवोऽस्य समाख्याताः पूर्वं हिंसानृतादयः । तद्वान् संयुज्यतेऽनेन विचित्रफलदायिना ॥ १०८ ॥ नैवं दृष्टे-
ष्टबाधा यत्सिद्धिश्चास्यानिवारिता । तदेनमेव विद्वांसस्तत्त्ववादं प्रचक्षते ॥ १०९ ॥ लोकायतमतं प्राज्ञैर्ज्ञेयं पापौघकारणम् ।
इत्थं तत्त्वविलोमं यत्तच्च ज्ञानविवर्धनम् ॥११० ॥ इंद्रप्रतारणायेदं चक्रे किल बृहस्पतिः । अदोऽपि युक्तिशून्यं यन्नेत्थ-
मिन्द्रः प्रतार्यते ॥ १११ ॥ तस्माद्दुष्टाशयकरं क्लिष्टसत्त्वविचिन्तितम् । पापश्रुतं सदा धीरैर्वर्ज्यं नास्तिकदर्शनम् ॥ ११२ ॥

## ॥ अथ द्वितीयः स्तवकः ॥

हिंसादिभ्योऽशुभं कर्म तदन्येभ्यश्च तच्छुभम् । जायते नियमो मानात्कुतोऽयमिति चापरे ॥ १ ॥ आगमाख्यात्तदन्ये तु तच्च दृष्टाद्यबाधितम् । सर्वार्थविषयं नित्यं व्यक्तार्थं परमात्मना ॥ २ ॥ चंद्रसूर्योपरागादेस्ततः संवाददर्शनात् । अप्रत्यक्षेऽपि पापादौ न प्रामाण्यं न युज्यते ॥ ३ ॥ यदि नाम क्वचिद्दृष्टः संवादोऽन्यत्र वस्तुनि । तद्भावस्तस्य तत्त्वं वा कथं समवसीयते ॥ ४ ॥ आगमैकत्वतस्तच्च वाक्यादेस्तुल्यतादिना । सुवृद्धसंप्रदायेन तथा पापक्षयेण च ॥ ५ ॥ अन्यथा वस्तुतत्त्वस्य परीक्षैव न युज्यते । आशंका सर्वगा यस्माच्छद्मस्थस्योपजायते ॥ ६ ॥ अपरीक्षापि नो युक्ता गुणदोषाविवेकतः । महत् संकटमायातमाशंके न्यायवादिनः ॥ ७ ॥ तस्माद्यथोदितात्सम्यगागमाख्यात्प्रमाणतः । हिंसादिभ्योऽशुभादीनि नियमोऽयं व्यवस्थितः ॥ ८ ॥ क्लिष्टाद्धिंसाद्यनुष्ठानात्प्राप्तिः क्लिष्टस्य कर्मणः । यथापथ्यभुजो व्याधेरक्लिष्टस्य विपर्ययात् ॥ ९ ॥ स्वभाव एष जीवस्य यत्तथा परिणामभाक् । बध्यते पुण्यपापाभ्यां माध्यस्थ्यात्तु विमुच्यते ॥ १० ॥ सुदूरमपि गत्वेह विहितासूपपत्तिषु । कः स्वभावागमावंते शरणं न प्रपद्यते ॥ ११ ॥ प्रतिपक्षस्वभावेन प्रतिपक्षागमेन च । बाधितत्वात्कथं ह्येतौ शरणं युक्तिवादिनाम् ॥ १२ ॥ प्रतीत्या बाध्यते यो यत्स्वभावो न स युज्यते । वस्तुनः कल्प्यमानोऽपि वह्न्यादेः शीततादिवत् ॥ १३ ॥ वह्नेः शीतत्वमस्त्येव तत्कार्यं किं न दृश्यते । दृश्यते हि हिमासन्ने कथ-

मित्थं स्वभावतः ॥ १४ ॥ हिमस्यापि स्वभावोऽयं नियमाद्वह्निसंनिधौ । करोति दाहमित्येवं वह्न्यादेः शीतता न किम् ॥ १५ ॥ व्यवस्थाभावतो ह्येवं या त्वद्बुद्धिरिहेदृशी । सा लोष्टादस्य यत्कार्यं तत्त्वतस्तत्स्वभावतः ॥ १६ ॥ एवं सुबुद्धिशून्यत्वं भवतोऽपि प्रसज्यते । अस्तु चेत् को विवादो नो बुद्धिशून्येन सर्वथा ॥ १७ ॥ अन्यस्त्वाहेह सिद्धेऽपि हिंसादिभ्योऽशुभादिके । शुभादेरेव सौख्यादि केन मानेन गम्यते ॥ १८ ॥ अत्रापि ब्रुवते केचित्सर्वथा युक्तिवादिनः । प्रतीतिगर्भया युक्त्या किलैतदवसीयते ॥ १९ ॥ तथाहुर्नाशुभात्सौख्यं तद्बाहुल्यप्रसंगतः । बहवः पापकर्माणो विरलाः शुभकारिणः ॥ २० ॥ न चैतद्दृश्यते लोके दुःखबाहुल्यदर्शनात् । शुभात्सौख्यं ततः सिद्धमतोऽन्यद्याप्यतोऽन्यतः ॥ २१ ॥ अन्ये पुनरिदं श्राद्धा ब्रुवत आगमेन वै । शुभादेरेव सौख्यादि गम्यते नान्यतः क्वचित् ॥ २२ ॥ अतीन्द्रियेषु भावेषु प्राय एवंविधेषु यत् । छद्मस्थस्याविसंवादि मानमन्यन्न विद्यते ॥ २३ ॥ यच्चोक्तं दुःखबाहुल्यदर्शनं तन्न साधकम् । क्वचित्तथोपलम्भेऽपि सर्वत्रादर्शनादिति ॥ २४ ॥ सर्वत्र दर्शनं यस्य तद्वाक्यात्किं न साधनम् । साधनं तद्भवत्येवमागमात्तु न भिद्यते ॥ २५ ॥ अशुभादप्यनुष्ठानात् सौख्यप्राप्तिश्च या क्वचित् । फलं विपाकविरसा सा तथाविधकर्मणः ॥ २६ ॥ ब्रह्महत्यानिदेशानुष्ठानाद्ग्रामादिलाभवत् । न पुनस्तत एवैतदागमादेव गम्यते ॥ २७ ॥ प्रतिपक्षागमानां च दृष्टेष्टाभ्यां विरोधतः । तथानाप्तप्रणीतत्वादागमत्वं न युज्यते ॥ २८ ॥ दृष्टेष्टाभ्यां विरोधाच्च तेषां नाप्तप्रणीतता । नियमाद्गम्यते यस्मात्तदसावेव दृश्यते ॥ २९ ॥ अगम्यगमनादीनां धर्मसाधनता क्वचित् । उक्ता लोकप्रसिद्धेन प्रत्यक्षेण विरुध्यते॥ ३० ॥ स्वधर्मोत्कर्षादेव तथा मुक्तिरपीष्यते । हेत्वभावेन तद्भावो नित्य इष्टेन बाध्यते ॥ ३१ ॥ माध्यस्थ्यमेव तद्धेतुरगम्यगम

नादिना । साध्यते तत्परं येन तेन दोषो न कश्चन ॥ ३२ ॥ एतदप्युक्तिमात्रं यदगम्यगमनादिषु । तथाप्रवृत्तितो मुख्या
माध्यस्थ्यं नोपपद्यते ॥ ३३ ॥ अप्रवृत्त्यैव सर्वत्र यथासामर्थ्यभावतः । विशुद्धभावनाभ्यासात् तन्माध्यस्थ्यं परं यतः ॥
॥ ३४ ॥ यावदेवंविधं नैतत्प्रवृत्तिस्तावदेव या । साऽविशेषेण साध्वीति तस्योत्कर्षप्रसाधनात् ॥ ३५ ॥ नाप्रवृत्तेरियं हेतुः
कुतश्चिदनिवर्तनात् । सर्वत्र भावाविच्छेदादन्यथागम्यसंस्थितिः ॥ ३६ ॥ तच्चास्तु लोकशास्त्रोक्तं तत्रौदासीन्ययोगतः ।
संभाव्यते परं ह्येतद्भावशुद्धेर्महात्मनाम् ॥ ३७ ॥ संसारमोचकस्यापि हिंसा यद्धर्मसाधनम् । मुक्तिश्चास्ति ततस्तस्याप्येष
दोषोऽनिवारितः ॥ ३८ ॥ मुक्तिः कर्मक्षयादेव जायते नान्यतः क्वचित् । जन्मादिरहिता यत्तत्स एवात्र निरूप्यते ॥ ३९ ॥
हिंसाद्युत्कर्षसाध्यो वा तद्विपर्ययजोऽपि वा । अन्यहेतुरहेतुर्वा स वै कर्मक्षयो ननु ॥ ४० ॥ हिंसाद्युत्कर्षसाध्यत्वे तदभावे
न तत्स्थितिः । कर्मक्षयास्थितौ च स्यान्मुक्तानां मुक्तताक्षतिः ॥ ४१ ॥ तद्विपर्ययसाध्यत्वे परसिद्धान्तसंस्थितिः । कर्मक्षयः
सतां यस्मादहिंसादिप्रसाधनः ॥ ४२ ॥ तदन्यहेतुसाध्यत्वे तत्स्वरूपमसंस्थितम् । अहेतुत्वे सदा भावोऽभावो वा स्यात्स-
दैव हि ॥ ४३ ॥ मुक्तिः कर्मक्षयादिष्टा ज्ञानयोगफलं स च । अहिंसादि च तद्धेतुरिति न्यायः सतां मतः ॥ ४४ ॥ एवं
वेदविहितापि हिंसा पापाय तत्त्वतः । शास्त्रचोदितभावेऽपि वचनांतरबाधनात् ॥ ४५ ॥ न हिंस्यादिह भूतानि हिंसनं
दोषकृन्मतम् । दाहवैद्यके स्पष्टमुत्सर्गप्रतिषेधतः ॥ ४६ ॥ ततो व्याधिनिवृत्त्यर्थं दाहः कार्यस्तु चोदिते । न ततोऽपि
न दोषः स्यात्फलोद्देशेन चोदनात् ॥ ४७ ॥ एवं तत्फलभावेऽपि चोदनातोऽपि सर्वथा । ध्रुवमौत्सर्गिको दोषो जायते
फलचोदनात् ॥ ४८ ॥ अन्येषामपि बुद्ध्यैवं दृष्टेष्टाभ्यां विरुद्धता । दर्शनीया कुशास्त्राणां ततश्च स्थितमित्यदः ॥ ४९ ॥

क्लिष्टं हिंसाद्यनुष्ठानं न यदस्यान्यतो मतम् । ततः कर्ता स एव स्यात्सर्वस्यैव हि कर्मणः ॥ ५० ॥ अनादिकर्मयुक्तत्वात्त-
न्मोहात्संप्रवर्तते । अहितेऽप्यात्मनः प्रायो व्याधिपीडितचित्तवत् ॥ ५१ ॥ कालादीनां च कर्तृत्वं मन्यंतेऽन्ये प्रवादिनः ।
केवलानां तदन्ये तु मिथः सामग्र्यपेक्षया ॥ ५२ ॥ न कालव्यतिरेकेण गर्भकालशुभादिकम् । यत्किंचिज्जायते लोके तदसौ
कारणं किल ॥ ५३ ॥ कालः पचति भूतानि कालः संहरति प्रजाः । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ ५४ ॥
किं च कालादृते नैव मुद्गपक्तिरपीष्यते । स्थाल्यादिसंनिधानेऽपि ततः कालादसौ मता ॥ ५५ ॥ कालाभावे च गर्भादि
सर्वं स्यादव्यवस्थया । परेष्टहेतुसद्भावमात्रादेव तदुद्भवात् ॥ ५६ ॥ न स्वभावातिरेकेण गर्भबालशुभादिकम् । यत्किंचि-
ज्जायते लोके तदसौ कारणं किल ॥ ५७ ॥ सर्वे भावाः स्वभावेन स्वस्वभावे तथा तथा । वर्ततेऽथ निवर्तंते कामचार-
पराङ्मुखाः ॥ ५८ ॥ न विनेह स्वभावेन मुद्गपक्तिरपीष्यते । तथा कालादिभावेऽपि नाश्वमाषस्य सा यतः ॥ ५९ ॥
अतत्स्वभावात्तद्भावेऽतिप्रसंगोऽनिवारितः । तुल्ये तत्र मृदः कुंभो न पटादीत्ययुक्तिमत् ॥ ६० ॥ नियतेनैव रूपेण सर्वे
भावा भवंति यत् । ततो नियतिजा ह्येते तत्स्वरूपानुवेधतः ॥ ६१ ॥ यद्यदेव यतो यावत्तत्तदेव ततस्तथा । नियतं जायते
न्यायात् क एतां बाधितुं क्षमः ॥ ६२ ॥ नचर्ते नियतिं लोके मुद्गपक्तिरपीक्ष्यते । तत्स्वभावादिभावेऽपि नासावनियता
यतः ॥ ६३ ॥ अन्यथानियतत्वेन सर्वभावः प्रसज्यते । अन्योन्यात्मकतापत्तेः क्रियावैफल्यमेव च ॥ ६४ ॥ न भोक्तृ-
व्यतिरेकेण भोग्यं जगति विद्यते । न चाकृतस्य भोक्ता स्यान्मुक्तानां भोगभावतः ॥ ६५ ॥ भोग्यं च विश्वं सत्त्वानां

विधिना तेन तेन यत् । दृश्यतेऽध्यक्षमेवेदं तस्मात्तत्कर्मजं हि तत् ॥ ६६ ॥ न च तत्कर्मवैधुर्ये मुद्गपक्तिरपीक्ष्यते । स्थाल्यादिभंगभावेन यत्क्वचिन्नोपपद्यते ॥ ६७ ॥ चित्रं भोग्यं तथा चित्रात्कर्मणो हेतुतान्यथा । तस्य यस्माद्विचित्रत्वं नियत्यादेर्न युज्यते ॥ ६८ ॥ नियतेर्नियतात्मत्वान्नियतानां समानता । तथाऽनियतभावे च बलात्स्यात्तद्विचित्रता ॥ ६९ ॥ न च तन्मात्रभावादेर्युज्यतेऽस्या विचित्रता । तदन्यभेदकं मुक्त्वा सम्यग्न्यायाविरोधतः ॥ ७० ॥ न जलस्यैकरूपस्य वियत्पाताद्विचित्रता । ऊषरादिधराभेदमंतरेणोपजायते ॥ ७१ ॥ तद्भिन्नभेदकत्वे च तत्र तस्या न कर्तृता । तत्कर्तृत्वे च चित्रत्वं तद्वत्तस्याप्यसंगतम् ॥ ७२ ॥ तस्या एव तथाभूतः स्वभावो यदि चेष्यते । त्यक्तो नियतिवादः स्यात्स्वभावाश्रयणान्ननु ॥ ७३ ॥ स्वो भावश्च स्वभावोऽपि स्वसत्तैव हि भावतः । तस्यापि भेदकाभावे वैचित्र्यं नोपपद्यते ॥ ७४ ॥ ततस्तस्याविशिष्टत्वाद्युगपद्विश्वसंभवः । न चासाविति सद्युक्त्या तद्वादोऽपि न संगतः ॥ ७५ ॥ तत्तत्कालादिसापेक्षो विश्वहेतुः स चेन्ननु । मुक्तः स्वभाववादः स्यात् कालवादपरिग्रहात् ॥ ७६ ॥ कालोऽपि समयादिर्यत्केवलः सोऽपि कारणम् । तत एव ह्यसंभूतेः कस्यचिन्नोपपद्यते ॥ ७७ ॥ यतश्च काले तुल्येऽपि सर्वत्रैव न तत्फलम् । अतो हेत्वंतरापेक्षं विज्ञेयं तद्विचक्षणैः ॥ ७८ ॥ अतः कालादयः सर्वे समुदायेन कारणम् । गर्भादेः कार्यजातस्य विज्ञेया न्यायवादिभिः ॥ ७९ ॥ न चैकैकत एवेह क्वचित् किंचिदपीक्ष्यते । तस्मात्सर्वस्य कार्यस्य सामग्री जनिका मता ॥ ८० ॥ स्वभावो नियतिश्चैव कर्मणोऽन्ये प्रचक्षते । धर्मावन्ये तु सर्वस्य सामान्येनैव वस्तुनः ॥ ८१ ॥ ॥ ॥ ॥ ॥

## ॥ अथ तृतीयः स्तवकः ॥

॥ ईश्वरः प्रेरकत्वेन कर्त्ता कैश्चिदिहेष्यते । अचिंत्यचिच्छक्तियुक्तोऽनादिशुद्धश्च सूरिभिः ॥ १ ॥ ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥ २ ॥ अज्ञो जंतुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥ ३ ॥ अन्ये त्वभिदधत्यत्र वीतरागस्य भावतः । इत्थं प्रयोजनाभावात्कर्तृत्वं युज्यते कथम् ॥ ४ ॥ नरकादिफले कांश्चित्कांश्चित्स्वर्गादिसाधने । कर्मणि प्रेरयत्याशु स जंतून् केन हेतुना ॥५॥ स्वयमेव प्रवर्तंते सत्त्वाश्चेच्चित्रकर्मणि । निरर्थकमिहेशस्य कर्तृत्वं गीयते कथम् ॥ ६ ॥ फलं ददाति चेत्सर्वं तत्तेनेह प्रचोदितम् । अफले पूर्वदोषः स्यात्सफले भक्तिमात्रता ॥ ७ ॥ आदिसर्गेऽपि नो हेतुः कृतकृत्यस्य विद्यते । प्रतिज्ञातविरोधित्वात् स्वभावोऽप्यप्रमाणकः ॥ ८ ॥ कर्मादेस्तत्स्वभावत्वे न किंचिद्बाध्यते विभोः । विभोस्तु तत्स्वभावत्वे कृतकृत्यत्वबाधनम् ॥ ९ ॥ ततश्चेश्वरकर्तृत्ववादोऽयं युज्यते परम् । सम्यग्न्यायाविरोधेन यथाहुः शुद्धबुद्धयः ॥ १० ॥ ईश्वरः परमात्मैव तदुक्तव्रतसेवनात् । यतो मुक्तिस्ततस्तस्याः कर्ता स्याद्गुणभावतः ॥ ११ ॥ तदनासेवनादेव यत्संसारोऽपि तत्त्वतः । तेन तस्यापि कर्तृत्वं कल्प्यमानं न दुष्यति ॥ १२ ॥ कर्तायमिति तद्वाक्ये यतः केषांचिदादरः । अतस्तदानुगुण्येन तस्य कर्तृत्वदेशना ॥ १३ ॥ परमैश्वर्ययुक्तत्वान्मत आत्मैव चेश्वरः । स च कर्तेति निर्दोषः कर्तृवादो व्यवस्थितः ॥ १४ ॥ शास्त्रकारा महात्मानः प्रायो वीत-

स्पृहा भवे । सत्त्वार्थसंप्रवृत्ताश्च कथं तेऽयुक्तभाषिणः ॥ १५ ॥ अभिप्रायस्ततस्तेषां सम्यग्मृग्यो हितैषिणा । न्यायशास्त्रा-
विरोधेन यथाह मनुरप्यदः ॥ १६ ॥ आर्षं च धर्मशास्त्रं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः
॥ १७ ॥ प्रधानोद्भवमन्ये तु मन्यंते सर्वमेव हि । महदादिक्रमेणेह कार्यजातं विपश्चितः ॥ १८ ॥ प्रधानान्महतो भावो-
ऽहंकारस्य ततोऽपि च । अक्षतन्मात्रवर्गस्य तन्मात्राद्भूतसंहतेः ॥ १९ ॥ घटाद्यपि पृथिव्यादिपरिणामसमुद्भवम् । नात्म-
व्यापारजं किंचित्तेषां लोकेऽपि विद्यते ॥ २० ॥ अन्ये तु ब्रुवते ह्येतत्प्रक्रियामात्रवर्णनम् । अविचार्यैव तद्युक्त्या श्रद्धया
गम्यते परम् ॥ २१ ॥ युक्त्या तु बाध्यते यस्मात्प्रधानं नित्यमिष्यते । तथात्वाप्रच्युतौ चास्य महदादि कथं भवेत् ॥ २२ ॥
तस्यैव तत्स्वभावत्वादिति चेत्किं न सर्वदा । अत एवेति चेत्तस्य तथात्वे ननु तत्कुतः ॥ २३ ॥ नानुपादानमन्यस्य भावे-
ऽन्यजातुचिद्भवेत् । तदुपादानतायां च न तस्यैकांतनित्यता ॥ २४ ॥ घटाद्यपि कुलालादिसापेक्षं दृश्यते भवत् । अतो न
तत्पृथिव्यादिपरिणामैकहेतुकम् ॥ २५ ॥ तत्रापि देहः कर्ता चेन्नैवासावात्मनः पृथक् । पृथगेवेति चेद्भोग आत्मनो युज्यते
कथम् ॥ २६ ॥ देहभोगेन नैवास्य भावतो भोग इष्यते । प्रतिबिंबोदयात् किं तु यथोक्तं पूर्वसूरिभिः ॥ २७ ॥ पुरुषो-
ऽविकृतात्मैव स्वनिर्भासमचेतनम् । मनः करोति सान्निध्यादुपाधिः स्फटिकं यथा ॥ २८ ॥ विभक्तेदृक्परिणतौ बुद्धौ भो-
गोऽस्य कथ्यते । प्रतिबिंबोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥ २९ ॥ प्रतिबिंबोदयोऽप्यस्य नामूर्तत्वेन युज्यते । मुक्तेरति-
प्रसंगाच्च न वै भोगः कदाचन ॥ ३० ॥ न च पूर्वस्वभावत्वात्स मुक्तानामसंगतः । स्वभावान्तरभावे च परिणामोऽनिवा-

१ तत्प्रामाण्याभ्युपगंतृश्रोतृप्रतिबोधार्थम्, एवमन्यत्रापि ।

॥ ७ ॥

रितः ॥ ३१ ॥ देहात्पृथक्कृत्य एयास्य न च हिंसादयः क्वचित् । तदभावेऽनिमित्तत्वात्कथं बन्धः शुभाशुभः ॥ ३२ ॥ बन्धादृते न संसारो मुक्तिर्वास्योपपद्यते । यमादि तदभावे च सर्वमेव ह्यपार्थकम् ॥ ३३ ॥ आत्मा न बध्यते नापि मुच्यतेऽसौ कदाचन । बध्यते मुच्यते वापि प्रकृतिः स्वात्मनेति चेत् ॥ ३४ ॥ एकान्तेनैकरूपाया नित्यायाश्च न सर्वथा । तस्याः क्रियान्तराभावाद्बंधमोक्षौ सुयुक्तितः ॥ ३५ ॥ मोक्षः प्रकृत्ययोगो यदतोऽस्याः स कथं भवेत् । स्वरूपविगमापत्तेस्तत्रा तंत्रविरोधतः ॥ ३६ ॥ पंचविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः । जटी मुंडी शिखी वापि मुच्यते नात्र संशयः ॥ ३७ ॥ पुरुषस्योदिता मुक्तिरिति तंत्रे चिरंतनैः । इत्थं न घटते चेयमिति सर्वमयुक्तिमत् ॥ ३८ ॥ अत्रापि पुरुषस्यान्ये मुक्तिमिच्छंति वादिनः । प्रकृतिं चापि सन्न्यायात्कर्मप्रकृतिमेव हि ॥ ३९ ॥ तस्याश्चानेकरूपत्वात् परिणामत्वयोगतः । आत्मनो बंधनत्वाच्च नोक्तदोषसमुद्भवः ॥ ४० ॥ नामूर्त्तं मूर्त्ततां याति मूर्त्तं न यात्यमूर्त्तताम् । यतो बंधादतो न्यायादात्मनोऽसंगतं तया ॥ ४१ ॥ देहस्पर्शादिसंवित्त्या न यात्येवेत्ययुक्तिमत् । अन्योन्यव्याप्तिजा चेयमिति बंधादिसंगतम् ॥ ४२ ॥ मूर्त्तयाप्यात्मनो योगो घटेन नभसो यथा । उपघातादिभावश्च ज्ञानस्येव सुरादिना ॥ ४३ ॥ एवं प्रकृतिवादोऽपि विज्ञेयः सत्य एव हि । कपिलोक्तत्वतश्चैव दिव्यो हि स महामुनिः ॥ ४४ ॥ ॥ ॥ ॥ ॥

## ॥ अथ चतुर्थः स्तवकः ॥

॥ मन्यंतेऽन्ये जगत्सर्वं क्लेशकर्मनिबंधनम् । क्षणक्षयि महाप्राज्ञा ज्ञानमात्रं तथापरे ॥ १ ॥ तथाहुः क्षणिकं सर्वं नाश-

हेतोरयोगतः । अर्थक्रियासमर्थत्वात् परिणामात् क्षयेक्षणात् ॥ २ ॥ ज्ञानमात्रं च यल्लोके ज्ञानमेवानुभूयते । नार्थस्तद्व्यतिरेकेण ततोऽसौ नैव विद्यते ॥ ३ ॥ अत्राप्यभिदधत्यन्ये स्मरणादेरसंभवात् । बाह्यार्थवेदनाच्चैव सर्वमेतदपार्थकम् ॥४॥ अनुभूतार्थविषयं स्मरणं लौकिकं यतः । कालान्तरे तथाऽनित्ये मुख्यमेतन्न युज्यते ॥ ५ ॥ सोऽन्तेवासी गुरुः सोऽयं प्रत्यभिज्ञाप्यसंगता । दृष्टकौतुकमुद्वेगः प्रवृत्तिः प्राप्तिरेव च ॥ ६ ॥ स्वकृतस्योपभोगस्तु दूरोत्सारित एव हि । शीलानुष्ठानहेतुर्यः स नश्यति तदैव यत् ॥ ७ ॥ संतानापेक्षयास्माकं व्यवहारोऽखिलो मतः । स चैक एव तस्मिंश्च सति कस्मान्न युज्यते ॥ ८ ॥ यस्मिन्नेव तु संतान आहिता कर्मवासना । फलं तत्रैव संधत्ते कर्पासे रक्तता यथा ॥ ९ ॥ एतदप्युक्तिमात्रं यन्न हेतुफलभावतः । संतानोऽन्यः स चायुक्त एवासत्कार्यवादिनः ॥ १० ॥ नाभावो भावतां याति शशशृंगे तथागतेः। भावो नाभावमेतीह तदुत्पत्त्यादिदोषतः ॥ ११ ॥ सतोऽसत्त्वे तदुत्पादस्ततो नाशोऽपि तस्य यत् । तन्नष्टस्य पुनर्भावः सदा नाशे न तत्स्थितिः ॥ १२ ॥ स क्षणस्थितिधर्मा चेद्द्वितीयादिक्षणास्थितौ । युज्यते ह्येतदप्यस्य तथा चोक्तानतिक्रमः ॥ १३ ॥ क्षणस्थितौ तदैवास्य नास्थितिर्युक्त्यसंगतेः । न पश्चादपि सा नेति सतोऽसत्त्वं व्यवस्थितम् ॥ १४ ॥ न तद्भवति चेत्किं न सदासत्त्वं तदेव यत् । न भवत्येतदेवास्य भवनं सूरयो विदुः ॥ १५ ॥ कादाचित्कमदो यस्मादुत्पादाद्यस्य तद्ध्रुवम् । तुच्छत्वान्नेत्यतुच्छस्याप्यतुच्छत्वात् कथं नु यत् ॥ १६ ॥ तदाभूतेरियं तुल्या तन्निवृत्तेर्न तस्य किम् । तुच्छतासेर्न भावोऽस्तु नासत्सत्सदसत् कथम् ॥ १७ ॥ स्वहेतोरेव तज्जातं तत्स्वभावं यतो ननु । तदनंतरभावित्वादितरत्राप्यदः समम् ॥ १८॥ नाहेतोरस्य भवनं न तुच्छे तत्स्वभावता । ततः कथं नु तद्भाव इति युक्त्या कथं समम् ॥ १९ ॥ स एव भावस्तद्धेतुस्तस्यैव हि

तदा स्थितेः । स्वनिवृत्तिस्वभावोऽस्य भावस्यैव ततो न किम् ॥ २० ॥ ज्ञेयत्ववत्स भावोऽपि न प्रागुक्तोऽस्य तद्विधः ।
तदभावे न तज्ज्ञानं तन्निवृत्तेर्गतिः कथम् ॥ २१ ॥ तत्तद्विधस्वभावं यत्प्रत्यक्षेण तथैव हि । गृह्यते तद्गतिस्तेन नैतत् क्वचि-
दनिश्चयात् ॥ २२ ॥ समारोपादसौ नेति गृहीतं तत्त्वतस्तु तत् । यथाभावग्रहाच्चास्यातिप्रसंगाददोऽप्यसत् ॥ २३ ॥ गृहीतं
सर्वमेतेन तत्त्वतो निश्चयः पुनः । मितग्रहसमारोपादिति तत्त्वव्यवस्थितेः ॥ २४ ॥ एकत्र निश्चयोऽन्यत्र निरंशानुभवा-
दपि । न तथापाटवाभावादित्यपूर्वमिदं तमः ॥ २५ ॥ स्वभावक्षणतो ह्यूर्ध्वं तुच्छता तन्निवृत्तितः । नासावेकक्षणग्राहिज्ञा-
नात्सम्यग्विभाव्यते ॥ २६ ॥ तस्यां च नागृहीतायां तत्तथेति विनिश्चयः । न हीन्द्रियमतीतादिग्राहकं सद्भिरिष्यते ॥ २७ ॥
अंतेऽपि दर्शनं नास्य कपालादिगतेः क्वचित् । न तदेव घटाभावो भावत्वेन प्रतीतितः ॥ २८ ॥ न तद्गतेर्गतिस्तस्य प्रति-
बंधविवेकतः । तस्यैवाभवनत्वे तु भावाविच्छेदतोऽन्वयः ॥ २९ ॥ तस्मादवश्यमेष्टव्यं तदूर्ध्वं तुच्छमेव तत् । ज्ञेयं सज्ज्ञायते
ह्येतदपरेणापि युक्तिमत् ॥ ३० ॥ नोत्पत्त्यादेस्तयोरैक्यं तुच्छेतरविशेषतः । निवृत्तिभेदतश्चैव बुद्धिभेदाच्च भाव्यताम् ॥ ३१ ॥
एतेनैतत्प्रतिक्षिप्तं यदुक्तं न्यायमानिना । न तत्र किंचिद्भवति न भवत्येव केवलम् ॥ ३२ ॥ भावे ह्येष विकल्पः स्याद्विधे-
र्वस्त्वनुरोधतः । न भावो भवतीत्युक्तमभावो भवतीत्यपि ॥ ३३ ॥ एतेनाहेतुकत्वेऽपि ह्यभूत्वा नाशभावतः । संतानास्ति-
त्वदोषस्य प्रत्याख्यातं प्रसंजनम् ॥ ३४ ॥ प्रतिक्षिप्तं च यत्सत्तानाशित्वायो निवारितम् । तुच्छरूपा सदा सत्ता भावासेर्ना-
शितोदिता ॥ ३५ ॥ भावस्याभवनं यत्तदभावभवनं तु यत् । तत्तथाधर्मके ह्युक्तविकल्पो न विरुध्यते ॥ ३६ ॥ तदेव न
भवत्येतद्विरुद्धमिव लक्ष्यते । तदेव वस्तुसंस्पर्शाद्भवनप्रतिषेधतः ॥ ३७ ॥ सतोऽसत्त्वं यतश्चैवं सर्वथा नोपपद्यते । भावो

विश्वस्य विश्वकार्यत्वं स्यात्तद्भावाविशेषतः ॥ ५६ ॥ अभिन्नदेशतादीनामसिद्धत्वादनन्वयात् । सर्वेषामविशिष्टत्वान्न तन्नि-
यमहेतुता ॥ ५७ ॥ योऽप्येकस्यान्यतो भावः संताने दृश्यतेऽन्यदा । तत एव विदेशस्थात्सोऽपि यत्तन्न बाधकः ॥ ५८ ॥
एतेनैतत्प्रतिक्षिप्तं यदुक्तं सूक्ष्मबुद्धिना । नासतो भावकर्तृत्वं तदवस्थांतरं न सः ॥ ५९ ॥ वस्तुनोऽनन्तरं सत्ता कस्यचिद्या
नियोगतः । सा तत्फलं मता सैव भावोत्पत्तिस्तदात्मिका ॥ ६० ॥ असदुत्पत्तिरप्यस्य प्रागसत्त्वात्प्रकीर्तिता । नासतः सत्त्व-
योगेन कारणात्कार्यभावतः ॥ ६१ ॥ प्रतिक्षिप्तं च तद्धेतोः प्राप्नोति फलतां विना । असतो भावकर्तृत्वं तदवस्थांतरं च
सः ॥ ६२ ॥ वस्तुनोऽनंतरं सत्ता तत्तथा तां विना भवेत् । नभःपातादसत्सत्त्वयोगाद्वेति न तत्फलम् ॥ ६३ ॥ असदुत्प-
त्तिरप्येवं नास्यैव प्रागसत्त्वतः । किं त्वसत्सन्नपत्त्येवमिति सम्यग्विचार्यताम् ॥ ६४ ॥ एतच्च नोक्तवद्युक्त्या सर्वथा युज्यते
यतः । नाभावो भावतां याति व्यवस्थितमिदं ततः ॥ ६५ ॥ यापि रूपादिसामग्री विशिष्टप्रत्ययोद्भवा । जनकत्वेन बुद्ध्यादेः
कल्प्यते साप्यनर्थिका ॥ ६६ ॥ सर्वेषां बुद्धिजनने यदि सामर्थ्यमिष्यते । रूपादीनां ततः कार्यभेदस्तेभ्यो न युज्यते ॥६७॥
रूपालोकादिकं कार्यमनेकं चोपजायते । तेभ्यस्तावद्भ्य एवेति तदेतच्चिंत्यतां कथम् ॥ ६८ ॥ प्रभूतानां च नैकत्र साध्वी
सामर्थ्यकल्पना । तेषां प्रभूतभावेन तदेकत्वविरोधतः ॥ ६९ ॥ तानशेषान् प्रतीत्येह भवदेकं कथं भवेत् । एकस्वभावमेकं
यत्तत्तु नानेकभावतः ॥ ७० ॥ यतो भिन्नस्वभावत्वे सति तेषामनेकता । तावत्सामर्थ्यभावे च कुतस्तस्यैकरूपता ॥ ७१ ॥
यज्जायते प्रतीत्यैकसामर्थ्यं नान्यतो हि तत् । तयोरभिन्नतापत्तेर्भेदे भेदस्तयोरपि ॥ ७२ ॥ न प्रतीत्यैकसामर्थ्यं जायते
तत्र किंचन । सर्वसामर्थ्यभूतिस्वभावत्वात्तस्य चेन्न तत् ॥ ७३ ॥ प्रत्येकं तस्य तद्भावे युक्ता ह्युक्तस्वभावता । न हि

यत्सर्वसामर्थ्यं तत्प्रत्येकत्ववर्जितम् ॥ ७४ ॥ अत्र चोक्तं न चाप्येषां तत्स्वन्नावत्वकल्पना । साध्वीत्यतिप्रसंगादेरन्यथा-
प्युक्तिसंन्नवात् ॥ ७५ ॥ अथान्यत्रापि सामर्थ्यं रूपादीनां प्रकल्प्यते । न तदेव तदित्येवं नाना चैकत्र तत्कुतः ॥ ७६ ॥
सामग्रीन्नेदतो यश्च कार्यन्नेदः प्रगीयते । नानाकार्यसमुत्पाद एकस्याः सोऽपि बाध्यते ॥ ७७ ॥ उपादानादिन्नेदेन न
चैकस्यास्तु संगता । युक्त्या विचार्यमाणेह तदनेकत्वकल्पना ॥ ७८ ॥ रूपं येन स्वन्नावेन रूपोपादानकारणम् । नि-
मित्तकारणं ज्ञाने तत्तेनान्येन वा न्नवेत् ॥ ७९ ॥ यदि तेनैव विज्ञानं बोधरूपं न युज्यते । अथान्येन बलाद्रूपं द्विस्व-
न्नावं प्रसज्यते ॥ ८० ॥ अबुद्धिजनकव्यावृत्त्या चेद्बुद्धिप्रसाधकः । रूपक्षणो ह्यबुद्धित्वात् कथं रूपस्य साधकः ॥ ८१ ॥
स हि व्यावृत्तिन्नेदेन रूपादिजनको ननु । उच्यते व्यवहारार्थमेकरूपोऽपि तत्त्वतः ॥८२॥ अगंधजननव्यावृत्त्यायं कस्मान्न
गन्धकृत् । उच्यते तदन्नावाच्चेन्नावोऽन्यस्याः प्रसज्यते ॥ ८३ ॥ एवं व्यावृत्तिन्नेदेऽपि तस्यानेकस्वन्नावता । बलादापद्यते
सा चायुक्ताभ्युपगमक्षतेः॥८४॥ विन्निन्नकार्यजननस्वन्नावाश्चाङ्कुरादयः । यदि ज्ञानेऽपि न्नेदः स्यान्न चेन्नेदो न युज्यते॥८५॥
सामग्र्यपेक्षयाप्येवं सर्वथा नोपपद्यते । यद्धेतुहेतुमन्नावस्तदेषाप्युक्तिमात्रकम् ॥ ८६ ॥ नानात्वाबाधनाच्चेह कुतः स्वकृतवे-
दनम् । सत्यप्यस्मिन् मिथोऽत्यंततन्नेदादिति चिंत्यताम् ॥ ८७ ॥ वास्यवासकन्नावाच्चेन्नैतत्तस्याप्यसंन्नवात् । असंन्नवः कथं
न्वस्य विकल्पानुपपत्तितः ॥ ८८ ॥ वासकाद्वासना न्निन्ना अन्निन्ना वा न्नवेद्यदि । न्निन्ना स्वयं तया शून्यो नैवान्यं वास-
यत्यसौ ॥ ८९ ॥ अथान्निन्ना न संक्रांतिस्तस्या वासकरूपवत् । वास्ये सत्यां च संसिद्धिर्व्यांशस्य प्रजायते ॥ ९० ॥ अस-
त्यामपि संक्रांतौ वासयत्येव चेदसौ । अतिप्रसंगः स्यादेवं स च न्यायबहिष्कृतः ॥ ९१ ॥ वास्यवासकन्नावश्च न हेतुफल-

भावतः । तत्त्वतोऽन्य इति न्यायात्स चायुक्तो निदर्शितः ॥ ९२ ॥ तत्तज्ञानस्वभावं जन्यभावं तथापरम् । अतः स्वभावनियमाभावायुक्तः स कदाचन ॥ ९३ ॥ उभयोर्ग्रहणाभावे न तथाभावकल्पनम् । तयोर्न्याय्यं न चैकेन द्वयोर्ग्रहणमस्ति यः ॥ ९४ ॥ एकमर्थं विजानाति न विज्ञानद्वयं यथा । विजानाति न विज्ञानमेकमर्थद्वयं तथा ॥ ९५ ॥ वस्तुस्थित्या तयोस्तस्य एकेनापि तथाग्रहात् । नो बाधकं न चैकेन द्वयोर्ग्रहणमस्त्यदः ॥ ९६ ॥ तथाग्रहस्तयोर्नेतरेतरग्रहणात्मकः । कदाचिदपि युक्तो यदतः कथमबाधकम् ॥ ९७ ॥ तथाग्रहे च सर्वत्राविनाभावग्रहं विना । न धूमादिग्रहादेव ह्यनलादिगतिः कथम् ॥ ९८ ॥ समनंतरवैकल्यं तत्रेत्यनुपपत्तिकम् । तुल्ययोरपि तद्भावे हंत क्वचिददर्शनात् ॥ ९९ ॥ न तयोस्तुल्यतैकस्य यस्मात्कारणकारणम् । बोधात्तद्धेतुविषयं नन्वेवमितरस्य च ॥ १०० ॥ यः केवलानलग्राहिज्ञानकारणकारणः । सोऽप्येवं न च तद्धेतोस्तज्ज्ञानादपि तद्गतिः ॥ १०१ ॥ तज्ज्ञानं यत्र वै धूमज्ञानस्य समनंतरः । तथाभूदित्यतो नेह तज्ज्ञानादपि तद्गतिः ॥ १०२ ॥ तथेति हंत कोऽन्वर्थस्तत्तथाभावतो यदि । इतरत्रैकमेवेत्थं ज्ञानं तद्भावि भाव्यताम् ॥ १०३ ॥ तदभावेऽन्यथाभावस्तस्य सोऽस्यापि विद्यते । अनंतरचिरातीतं तत्पुनर्वस्तुतः समम् ॥ १०४ ॥ अग्निज्ञानजमेतेन धूमज्ञानं स्वभावतः । तथाविकल्पकृन्नान्यदिति प्रत्युक्तमिष्यताम् ॥ १०५ ॥ अथ कथंचिदेकेन तयोरग्रहणे सति । तथाप्रतीतितो न्याय्यं न तथाभावकल्पनम् ॥ १०६ ॥ प्रत्यक्षानुपलंभाभ्यां हंतैवं साध्यते कथम् । कार्यकारणता तस्मात्सद्भावादेरनिश्चयात् ॥ १०७ ॥ न पूर्वमुत्तरं चेह तदन्याग्रहणाद्ध्रुवम् । गृह्यतेऽत इदं नातो नन्वतीन्द्रियदर्शनम् ॥ १०८ ॥ विकल्पोऽपि तथा न्यायाद्युज्यते न यनीदृशः । तत्संस्कारप्रसूतत्वात् क्षणिकत्वाच्च सर्वथा ॥ १०९ ॥ नेत्थं बोधान्यथाभावे घटते तद्वि-

निश्चयः । माध्यस्थ्यमवलंब्यैतच्चिंत्यतां स्वयमेव तु ॥ ११० ॥ अग्न्यादिज्ञानमेवेह न धूमज्ञानतां यतः । भजत्याकारभेदेन कुतो बोधान्वयस्ततः ॥ १११ ॥ तदाकारपरित्यागात्तस्याकारांतरस्थितिः । बोधान्वयप्रदीर्घैकाध्यवसायप्रवर्तकः ॥ ११२ ॥ स्वसंवेदनसिद्धत्वान्न च भ्रांतोऽयमित्यपि । कल्पना युज्यते युक्त्या सर्वभ्रांतिप्रसंगतः ॥ ११३ ॥ प्रदीर्घाध्यवसायेन नश्वरादिविनिश्चयः । अस्य च भ्रांततायां यत्तत्तथेति न युक्तिमत् ॥ ११४ ॥ तस्मादवश्यमेष्टव्या विकल्पस्यापि कस्यचित् । येन तेन प्रकारेण सर्वथाऽभ्रांतरूपता ॥ ११५ ॥ सत्यामस्यां स्थितोऽस्माकमुक्तवन्न्याययोगतः । बोधान्वयो दृढोऽसत्त्वभावाच्चातिप्रसंगतः ॥ ११६ ॥ अन्यादृशपदार्थेभ्यः स्वयमन्यादृशोऽप्ययम् । यतश्चेष्टस्ततो नास्मात्तत्रासंदिग्धनिश्चयः ॥ ११७ ॥ तत्तज्जननभावत्वे ध्रुवं तद्भावसंगतिः । तस्यैव भावो नान्यो यज्जन्यात्र जननं तथा ॥ ११८ ॥ एवं तज्जन्यभावत्वेऽप्येषा भाव्या विचक्षणैः । तदेव हि यतो भावः स चेतरसमाश्रयः ॥ ११९ ॥ इत्येवमन्वयापत्तिः शब्दार्थादेव जायते । अन्यथा कल्पनं चास्य सर्वथा न्यायबाधितम् ॥ १२० ॥ तद्रूपशक्तिशून्यं तत्कार्यं कार्यांतरं यथा । व्यापारोऽपि न तस्यापि नापेक्षा सत्त्वतः क्वचित् ॥ १२१ ॥ तथापि तु तयोरेव तत्स्वभावत्वकल्पनम् । अन्यत्रापि समानत्वात् केवलं ध्यांध्यसूचकम् ॥ ॥ १२२ ॥ किं चान्यत्क्षणिकत्वे व आर्षार्थोऽपि विरुध्यते । विरोधापादनं चास्य नाल्पस्य तमसः फलम् ॥ १२३ ॥ इत एकनवते कल्पे शक्त्या मे पुरुषो हतः । तेन कर्मविपाकेन पादे विद्धोऽस्मि भिक्षवः ॥ १२४ ॥ मे मयेत्यात्मनिर्देशस्तद्गतोक्ता वधक्रिया । स्वयमाप्तेन यत्तद्वः कोऽयं क्षणिकताग्रहः ॥ १२५ ॥ संतानापेक्षयैतच्चेदुक्तं भगवता ननु । स हेतुफलभावो यत्तन्मे इति न संगतम् ॥ १२६ ॥ ममेति हेतुशक्त्या चेत्तस्यार्थोऽयं विवक्षितः । नात्र प्रमाणमत्यक्षा तद्विवक्षा

यतो मता ॥ १२७ ॥ तद्देशना प्रमाणं चेन्न साऽन्यार्था भविष्यति । तत्रापि किं प्रमाणं चेदिदं पूर्वोक्तमार्षकम् ॥ १२८ ॥
तथान्यदपि यत्कल्पस्थायिनी पृथिवी क्वचित् । उक्ता भगवता भिक्षूनामंत्र्य स्वयमेव तु ॥ १२९ ॥ पंचः बाह्या द्विविज्ञेया
इत्यन्यदपि चार्षकम् । प्रमाणमवगंतव्यं प्रक्रांतार्थप्रसाधकम् ॥ १३० ॥ क्षणिकत्वे यतोऽमीषां न द्विविज्ञेयता भवेत् ।
भिन्नकालग्रहे ह्याभ्यां तच्छब्दार्थोपपत्तितः ॥ १३१ ॥ एककालग्रहे तु स्यात्तत्रैकस्याप्रमाणता । गृहीतग्रहणादेवं मिथ्या
तथागतं वचः ॥ १३२ ॥ इन्द्रियेण परिच्छिन्ने रूपादौ तदनंतरम् । यद्रूपादि ततस्तत्र मनोज्ञानं प्रवर्तते ॥ १३३ ॥ एवं च
न विरोधोऽस्ति द्विविज्ञेयत्वभावतः । पंचानामपि चेन्न्यायादेतदप्यसमंजसम् ॥ १३४ ॥ नैकोऽपि यद्द्विविज्ञेय एकैकेनैव वेद-
नात् । सामान्यापेक्षयैतच्चेन्न तत्सत्त्वप्रसंगतः ॥ १३५ ॥ सत्त्वेऽपि नेन्द्रियज्ञानं हंत तद्गोचरं मतम् । द्विविज्ञेयत्वमित्येवं
क्षणभेदे न तत्त्वतः ॥ १३६ ॥ सर्वमेतेन विक्षिप्तं क्षणिकत्वप्रसाधनम् । तथाप्यूर्ध्वं विशेषेण किंचित्तत्रापि वक्ष्यते ॥१३७॥

## ॥ अथ पंचमः स्तबकः ॥

॥ विज्ञानमात्रवादोऽपि न सम्यगुपपद्यते । मानं यत्तत्त्वतः किंचिदर्थाभावे न विद्यते ॥ १ ॥ न प्रत्यक्षं यतो भावालं-
बनं न तदिष्यते । नानुमानं तथाभूतसल्लिंगानुपलब्धितः ॥ २ ॥ उपलब्धिलक्षणप्राप्तोऽर्थो येनोपलभ्यते । ततश्चानुपल-
भ्यैव तदभावोऽवसीयते ॥ ३ ॥ उपलब्धिलक्षणप्राप्तिस्तद्धेत्वंतरसंहतिः । तेषां च तत्स्वभावत्वे तस्यासिद्धिः कथं भवेत्
॥ ४ ॥ सहार्थेन तज्जननस्वभावानीति चेन्ननु । जनयत्येव सत्येवमन्यथा तत्स्वभावता ॥ ५ ॥ योग्यतामधिकृत्याथ तत्स्व-

भावत्वकल्पना । हंतैवमपि सिद्धोऽर्थः कदाचिदुपलब्धितः ॥ ६ ॥ अन्यथा योग्यता तेषां कथं युक्त्योपपद्यते । न हि लोकेऽश्वमापादेः सिद्धा पक्त्यादियोग्यता ॥ ७ ॥ पराभिप्रायतो ह्येतदेवं चेदुच्यते न यत् । उपलब्धिलक्षणप्राप्तोऽर्थस्तस्योपलभ्यते ॥ ८ ॥ अतद्ग्रहणभावेश्च यदि नाम न गृह्यते । तत एतावता सत्त्वं न तस्यातिप्रसंगतः ॥ ९ ॥ विज्ञानं यत्स्वसंवेद्यं न त्वर्थो युक्तियोगतः । अतस्तद्वेदने तस्य ग्रहणं नोपपद्यते ॥ १० ॥ एवं चाग्रहणादेव तदभावोऽवसीयते । अतः किमुच्यते मानमर्थाभावे न विद्यते ॥ ११ ॥ अर्थग्रहणरूपं यत्तत्स्वसंवेद्यमिष्यते । तद्वेदने ग्रहस्तस्य ततः किं नोपपद्यते ॥ १२ ॥ घटादिज्ञानमित्यादिसंवित्तेस्तत्प्रवृत्तितः । प्राप्तेरर्थक्रियायोगात् स्मृतेः कौतुकभावतः ॥ १३ ॥ ज्ञानमात्रे तु विज्ञानं ज्ञानमेवेत्यदो भवेत् । प्रवृत्त्यादि ततो न स्यात्प्रसिद्धं लोकशास्त्रयोः ॥ १४ ॥ तदन्यग्रहणे चास्य प्रद्वेषोऽर्थेऽनिबंधनः । ज्ञानांतरेऽपि सदृशं तदसंवेदनादि यत् ॥ १५ ॥ युक्त्ययोगश्च योऽर्थस्य गीयते जातिवादतः । ग्राह्यादिभावद्वारेण ज्ञानवादेऽप्यसौ समः ॥ १६ ॥ नैकांतग्राह्यभावं तद्ग्राहकाभावतो भुवि । ग्राहकैकांतभावं तु ग्राह्याभावादसंगतम् ॥१७॥ विरोधान्नोभयाकारमन्यथा तदसद्भवेत् । निःस्वभावत्वतस्तस्य सत्त्वं युज्यते कथम् ॥ १८ ॥ प्रकाशकस्वभावं हि विज्ञानं तत्त्वतो मतम् । अकर्मकं तथा चैतत्स्वयमेव प्रकाशते ॥ १९ ॥ यथास्ते शेत इत्यादौ विना कर्म स एव हि । तथोच्यते जगत्यस्मिंस्तथा ज्ञानमपीष्यताम् ॥ २० ॥ उच्यते सांप्रतमदः स्वयमेव विचिंत्यताम् । प्रमाणाभावतस्तन्न यद्येतदुपपद्यते ॥ २१ ॥ एवं न यत्तदात्मानमपि हंत प्रकाशयेत् । अतस्तदित्थं नो युक्तमन्यथा न व्यवस्थितिः ॥ २२ ॥ व्यवस्थितो च तत्त्वस्य तथाभावप्रकाशकम् । ध्रुवं यतस्ततोऽकर्मकत्वमस्य कथं भवेत् ॥ २३ ॥ व्यवस्थापकमस्यैवं भ्रांतं चैतत्तु भावतः ।

तथेत्यभ्रांतमत्रापि ननु मानं न विद्यते ॥ २४ ॥ भ्रांताभ्रांतिरूपा न युक्तियुक्त्या व्यवस्थितिः । दृष्टा तैमिरिकादीनामक्षादाविति चेन्न तत् ॥ २५ ॥ नाक्षादिदोषविज्ञानं तदन्यभ्रांतिवद्यतः । भ्रांतं तस्य तथाभावे भ्रांतस्याभ्रांतता भवेत् ॥ २६ ॥ न च प्रकाशमात्रं तु लोके क्वचिदकर्मकम् । दीपादौ युज्यते न्यायादतश्चैतदपार्थकम् ॥ २७ ॥ दृष्टांतमात्रतः सिद्धिस्तदत्यंतविधर्मिणः । न च साध्यस्य यत्तेन शब्दमात्रमसावपि ॥ २८ ॥ किं च विज्ञानमात्रत्वे न संसारापवर्गयोः । विशेषो विद्यते कश्चित्तथा चैतत्कृयोदितम् ॥ २९ ॥ चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवांत इति कथ्यते ॥ ३० ॥ रागादिक्लेशवर्गो यन्न विज्ञानात्पृथग्मतः । एकांतैकस्वभावे च तस्मिन् किं केन वासितम् ॥ ३१ ॥ क्लिष्टं विज्ञानमेवासौ क्लिष्टता तत्र यद्वशात् । नील्यादिवदसौ वस्तु तद्वदेव प्रसज्यते ॥ ३२ ॥ मुक्तौ च तस्य भेदेन भावः स्यात्सदशुद्धिवत् । ततो बाह्यार्थतासिद्धिरनिष्टा संप्रसज्यते ॥ ३३ ॥ प्रकृत्यैव तथाभूतं तदेव क्लिष्टतेति चेत् । तदन्यूनातिरिक्तत्वे केन युक्तिर्विचिंत्यताम् ॥ ३४ ॥ असत्यपि च या बाह्ये ग्राह्यग्राहकलक्षणे । द्विचंद्रभ्रांतिवद्भ्रांतिरियं वः क्लिष्टतेति चेत् ॥ ३५ ॥ अस्त्वेतत्किं तु तद्धेतुर्निग्रहेत्यंतरोद्भवा । इयं स्यात्तिमिराभावे न हीन्दुद्वयदर्शनम् ॥ ३६ ॥ न चासदेव तद्धेतुर्बोधमात्रं न चापि तत् । सदैव क्लिष्टतापत्तिरिति मुक्तिर्न युज्यते ॥ ३७ ॥ मुक्त्यभावे च सर्वैव ननु चिंता निरर्थिका । भावेऽपि सर्वदा तस्याः सम्यगेतद्विचिंत्यताम् ॥ ३८ ॥ विज्ञानमात्रवादोऽयं नेत्थं युक्त्योपपद्यते । माध्यस्थ्यान्निवेशो न तस्मादत्रापि युज्यते ॥ ३९ ॥ ॥ ॥ ॥ ॥ ॥

## ॥ अथ षष्ठः स्तवकः ॥

यच्चोक्तं पूर्वमत्रैव क्षणिकत्वप्रसाधकम् । नाशहेतोरयोगादि तदिदानीं परीक्ष्यते ॥ १ ॥ हेतोः स्यान्नश्वरो भावोऽनश्वरो वा विकल्पयन् । नाशहेतोरयोगित्वमुच्यते तन्न युक्तिमत् ॥ २ ॥ हेतुं प्रतीत्य यदसौ तथा नश्वर इष्यते । यथैव भवतो हेतुर्विशिष्टफलसाधकः ॥ ३ ॥ तथास्वभाव एवासौ स्वहेतोरेव जायते । सहकारिणमासाद्य यस्तथाविधकार्यकृत् ॥ ४ ॥ न पुनः क्रियते किंचित्तेनास्य सहकारिणा । समानकालभावित्वात्तथा चोक्तमिदं तव ॥ ५ ॥ उपकारी विरोधी च सहकारी च यो मतः । प्रबंधापेक्षया सर्वो नैककाले कथंचन ॥ ६ ॥ सहकारिकृतो हेतोर्विशेषो नास्ति यद्यपि । फलस्य तु विशेषोऽस्ति तत्कृतातिशयान्वितः ॥ ७ ॥ न चास्यातत्स्वभावत्वे सफलस्यापि युज्यते । सभागक्षणजन्मासेस्तथाविधतदन्यवत् ॥ ८ ॥ अस्थानपक्षपातश्च हेतोरनुपकारिणः । अपेक्षायां नियुंक्ते यत्कार्यमेतत्कृयोदितम् ॥ ९ ॥ यस्मात्तस्याप्यदस्तुल्यं विशिष्टफलसाधकम् । भावहेतुं समाश्रित्य ननु न्यायान्निदर्शितम् ॥ १० ॥ एवं च व्यर्थमेवेह व्यतिरिक्तादिचिंतनम् । नाश्यमाश्रित्य नाशस्य क्रियते यद्विचक्षणैः ॥ ११ ॥ किंच निर्हेतुके नाशे हिंसकत्वं न युज्यते । व्यापाद्यते सदा यस्मान्न कश्चित्केनचित्क्वचित् ॥ १२ ॥ कारणत्वात् स संतानविशेषप्रभवस्य चेत् । हिंसकस्तत्र संतानसमुत्पत्तेरसंभवात् ॥ १३ ॥ सांवृतत्वाद्धयोत्पादो संतानस्य खपुष्पवत् । न सत्तदधर्मत्वाच्च हेतुस्तत्संभवे कुतः ॥ १४ ॥ विसभागक्षणस्याथ जनको हिंसको न तत् । स्वतोऽपि तस्य तत्प्रासेर्जनकत्वाविशेषतः ॥ १५ ॥ हन्म्येनमिति संक्लेशाद्धिंसकश्चेत्प्रकल्प्यते । नैव त्वभी-

तितो यस्मादयमेव न युज्यते ॥ १६ ॥ संक्लेशो यद्गुणोत्पादः स चाक्लिष्टाच्च केवलात् । न चान्यसचिवस्यापि तस्यानतिश-
याततः ॥ १७ ॥ तं प्राप्य तत्स्वभावत्वात्ततः स इति चेन्ननु । नाशहेतुमवाप्यैवं नाशपक्षेऽपि न क्षतिः ॥ १८ ॥ अन्ये
तु जन्यमाश्रित्य तत्स्वभावाद्यपेक्षया । एवमाहुरहेतुत्वं जनकस्यापि सर्वथा ॥ १९ ॥ न तत्स्वभावजनकस्तदपेक्ष्यप्रसंगतः ।
जन्मायोगादिदोषाच्च नेतरस्यापि युज्यते ॥ २० ॥ न चोभयादिभावस्य विरोधासंभवादितः । स्वनिवृत्त्यादिभावादौ का-
र्याभावादितोऽपरे ॥ २१ ॥ न चाध्यक्षविरुद्धत्वं जनकत्वस्य मानतः । असिद्धेरत्र नीत्या तद्व्यवहारनिषेधतः ॥ २२ ॥
मानाभावे परेणापि व्यवहारो निषिध्यते । सज्ज्ञानशब्दविषयस्तद्वदत्रापि दृश्यताम् ॥ २३ ॥ अर्थक्रियासमर्थत्वं क्षणिके
यच्च गीयते । उत्पत्त्यनंतरं नाशाद्विज्ञेयं तदयुक्तिमत् ॥ २४ ॥ अर्थक्रिया यतोऽसौ वा तदन्या वा द्वयी गतिः । तत्त्वे न
तत्र सामर्थ्यमन्यतस्तत्समुद्भवात् ॥ २५ ॥ न स्वसंधारणे न्यायाज्जन्मानंतरनाशतः । न च नाशेऽपि सद्युक्त्या तद्धेतोस्त-
त्समुद्भवात् ॥ २६ ॥ अन्यत्वेऽन्यस्य सामर्थ्यमन्यत्रेति न संगतम् । ततोऽन्यभाव एवैतन्नासौ न्याय्यो दलं विना ॥ २७ ॥
नासत्सज्जायते यस्मादन्यसत्त्वस्थितावपि । तस्यैव तु तथाभावे नन्वसिद्धोऽन्वयः कथम् ॥ २८ ॥ भूतिर्येषां क्रिया सोक्ता
न चासौ युज्यते क्वचित् । कर्तृभोक्तृस्वभावत्वविरोधादिति चिंत्यताम् ॥ २९ ॥ न चातीतस्य सामर्थ्यं तस्यामिति निदर्शि-
तम् । न चान्यो लौकिकः कश्चिच्छब्दार्थोऽत्रेत्ययुक्तिमत् ॥ ३० ॥ परिणामोऽपि नो हेतुः क्षणिकत्वप्रसाधने । सर्वदैवान्य-
थात्वेऽपि तथाभावोपलब्धितः ॥ ३१ ॥ नार्थांतरगमो यस्मात्सर्वथैव न चागमः । परिणामः प्रमासिद्ध इष्टश्च खलु पंडितैः
॥ ३२ ॥ यच्चेदमुच्यते भूमोऽताद्वस्थ्यमनित्यताम् । एतत्तदेव न भवत्यतोऽन्यत्वे ध्रुवोऽन्वयः ॥ ३३ ॥ तदेव न भवत्ये-

तत्तच्चेन्न भवतीति च । विरुद्धं हंत किं चान्यदादिमत्तत्प्रसज्यते ॥ ३४ ॥ क्षीरनाशश्च दध्येव यद्दृष्टं गोरसान्वितम् । न तु तैलाद्यतः सिद्धः परिणामोऽन्वयावहः ॥ ३५ ॥ नासत्सज्जायते जातु सच्चासत्सर्वथैव हि । शक्त्यभावादिति व्यासेः सत्स्वभावत्वहानितः ॥ ३६ ॥ नित्येतरदतो न्यायात्तत्तथाभावतो हि तत् । प्रतीतिसचिवात्सम्यक् परिणामेन गम्यते ॥ ३७ ॥ अंते क्षयेक्षणं चाद्यक्षणक्षयप्रसाधनम् । तस्यैव तत्स्वभावत्वाद्युज्यते न कदाचन ॥ ३८ ॥ आदौ क्षयस्वभावे च तत्रांते दर्शनं कथम् । तुल्यापरापरोत्पत्तिविप्रलंभाद्यथोदितम् ॥ ३९ ॥ अंते क्षयेक्षणादादौ क्षयोऽदृष्टोऽनुमीयते । सदृशेनावरुद्धत्वात्तद्ग्रहाद्धि तदग्रहः ॥ ४० ॥ एतदप्यसदेवेति सदृशो भिन्न एव यत् । भेदाग्रहे कथं तस्य तत्स्वभावत्वतो ग्रहः ॥ ४१ ॥ तदर्थनियतोऽसौ यद्भेदमन्याग्रहाद्धि तत् । न गृह्णातीति चेत्तुल्यः सोऽपरेण कुतो गतिः ॥ ४२ ॥ तथागतेर्भावे च वचस्तुच्छमिदं ननु । सदृशेनावरुद्धत्वात्तद्ग्रहाद्धि तदग्रहः ॥ ४३ ॥ भावे चास्या बलादेकमनेकग्रहणात्मकम् । अन्वयि ज्ञानमेष्टव्यं सर्वं तत्क्षणिकं कुतः ॥ ४४ ॥ ज्ञानेन गृह्यते चार्थो न चापि परदर्शने । तदभावे नु तद्भावात्कदाचिदपि तत्त्वतः ॥ ४५ ॥ ग्रहणेऽपि यदा ज्ञानमुदेत्युत्पत्त्यनंतरम् । तदा तत्तस्य जानाति क्षणिकत्वं कथं ननु ॥ ४६ ॥ तस्यैव तत्स्वभावत्वात् स्वात्मनैव तदुद्भवात् । यथा नीलादिताद्रूप्यात्तन्मिथ्यात्वसंशयात् ॥ ४७ ॥ न चापि स्वानुमानेन धर्मभेदस्य संभवात् । लिंगधर्मातिपाताच्च तत्स्वभावाद्ययोगतः ॥ ४८ ॥ नित्यस्यार्थक्रियायोगोऽप्येवं युक्त्या न गम्यते । सर्वमेवाविशेषेण विज्ञानं क्षणिकं यतः ॥ ४९ ॥ तथा चित्रस्वभावत्वान्न चार्थस्य न युज्यते । अर्थक्रिया ननु न्यायात्क्रमाक्रमविभावनी ॥ ५० ॥ अन्ये त्वभिदधत्येवमेतदास्थानिवृत्तये । क्षणिकं सर्वमेवेति बुद्धेनोक्तं न तत्त्वतः ॥ ५१ ॥ विज्ञानमात्रम-

प्येवं बाह्यसंगनिवृत्तये । विनेयान् कांश्चिदाश्रित्य यद्वा तद्देशनाहृतः ॥ ५२ ॥ न चैतदपि न न्याय्यं यतो बुद्धो महामुनिः । सुवैद्यवद्विना कार्यं द्रव्यासत्यं न भाषते ॥ ५३ ॥ ब्रुवते शून्यमन्ये तु सर्वमेव विचक्षणाः । न नित्यं नाप्यनित्यं यद्वस्तु युक्त्योपपद्यते ॥ ५४ ॥ नित्यमर्थक्रियाभावात्क्रमाक्रमविरोधतः । अनित्यमपि चोत्पादव्ययाभावान्न जातुचित् ॥ ५५ ॥ उत्पादव्ययबुद्धिश्च भ्रांतानंदादिकारणम् । कुमार्याः स्वप्नवज्ज्ञेया पुत्रजन्मादिबुद्धिवत् ॥ ५६ ॥ अत्राप्यभिदधत्यन्ये किमित्थं तत्त्वसाधनम् । प्रमाणं विद्यते किंचिदाहोस्विच्छून्यमेव हि ॥ ५७ ॥ शून्यं चेत्सुस्थितं तत्त्वमस्ति चेच्छून्यता कथम् । तस्यैव ननु सद्भावादिति सम्यग्विचिंत्यताम् ॥ ५८ ॥ प्रमाणमंतरेणापि स्यादेवं तत्त्वसंस्थितिः । अन्यथा नेति सुव्यक्तमिदमीश्वरचेष्टितम् ॥ ५९ ॥ उक्तं विहाय मानं चेच्छून्यतान्यस्य वस्तुनः । शून्यत्वे प्रतिपाद्यस्य ननु व्यर्थः परिश्रमः ॥ ६० ॥ तस्याप्यशून्यतायां च प्राश्निकानां बहुत्वतः । प्रभूता शून्यतापत्तिरनिष्टा संप्रसज्यते ॥ ६१ ॥ यावतामस्ति तन्मानं प्रतिपाद्यास्तथा च ये । संति ते सर्व एवेति प्रभूतानामशून्यता ॥ ६२ ॥ एवं च शून्यवादोऽपि तद्विनेयानुगुण्यतः । अभिप्रायत इत्युक्तो लक्ष्यते तत्त्ववेदिना ॥ ६३ ॥ ॥ ॥ ॥ ॥

## ॥ अथ सप्तमः स्तवकः ॥

---

अन्ये त्वाहुरनाद्येव जीवाजीवात्मकं जगत् । सदुत्पादव्ययध्रौव्ययुक्तं शास्त्रकृतश्रमाः ॥ १ ॥ घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम् । शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥ २ ॥ पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः । अ-

तत्तच्चेन्मानमेवेति स्यात्तद्भावादृते कथम् ॥२१॥ न स्वसत्त्वं परासत्त्वं तदसत्त्वविरोधतः। स्वसत्त्वासत्त्ववद्व्यायाश्च च नास्त्येव
तत्र तत्॥२२॥ परिकल्पितमेतच्चेन्नन्वित्थं तत्त्वतो न तत्। ततः क इह दोषश्चेन्ननु तद्भावसंगतिः॥२३॥ अनेकांतत एवातः
सम्यग्मानव्यवस्थितेः। स्याद्वादिनो नियोगेन युज्यते निश्चयः परम् ॥ २४ ॥ एतेन सर्वमेवेति यदुक्तं तन्निराकृतम्। शि-
ष्यव्युत्पत्तये किंचित्तथाप्यपरमुच्यते ॥ २५ ॥ संसारी चेत्स एवेति कथं मुक्तस्य संभवः। मुक्तोऽपि चेत्स एवेति व्यपदे-
शोऽनिर्बंधनः ॥ २६ ॥ संसाराद्विप्रमुक्तो यन्मुक्त इत्यभिधीयते। नैतत्तस्यैव तद्भावमंतरेणोपपद्यते ॥ २७ ॥ तस्यैव च त-
थाभावे तन्निवृत्तीतरात्मकम्। द्रव्यपर्यायवद्वस्तु बलादेव प्रसिध्यति ॥ २८ ॥ लभते बाल्यचरितैर्बाल एव न चापि यत्।
युवा न लभते चान्यस्तैरायत्यैव चेष्टते ॥ २९ ॥ युवैव न च वृद्धोऽपि नान्यार्थं चेष्टनं च तत्। अन्वयादिमयं वस्तु तद-
भावोऽन्यथा भवेत् ॥ ३० ॥ अन्वयो व्यतिरेकश्च द्रव्यपर्यायसंज्ञितौ। अन्योन्यव्याप्तितो भेदाभेदवृत्त्यैव वस्तु तौ॥३१॥
नान्योऽन्यव्याप्तिरेकांतभेदेऽभेदे च युज्यते। अतिप्रसंगादैक्याच्च शब्दार्थानुपपत्तितः ॥ ३२ ॥ अन्योऽन्यमिति यद्भेदं व्या-
प्तिश्चाह विपर्ययम्। भेदाभेदे द्वयोस्तस्मादन्योऽन्यव्याप्तिसंभवः ॥ ३३ ॥ एवं न्यायाविरुद्धेऽस्मिन् विरोधोद्भावनं नृणाम्।
व्यसनं वा जडत्वं वा प्रकाशयति केवलम् ॥३४॥ न्यायात् खलु विरोधो यः स विरोध इहोच्यते। यद्वदेकांतभेदादौ तयोरेवा-
प्रसिद्धितः ॥ ३५ ॥ मृद्द्रव्यं यन्न पिंडादिधर्मांतरविवर्जितम्। यद्वा तेन विनिर्मुक्तं केवलं गम्यते क्वचित् ॥ ३६ ॥ ततोऽस-
त्तथान्यायादेकं चोभयसिद्धितः। अन्यत्रातो विरोधस्तदभावापत्तिलक्षणः ॥ ३७ ॥ जात्यंतरात्मके चास्मिन्नानवस्थादि-
दूषणम्। नियतत्वाद्विविक्तस्य भेदादेश्चाप्यसंभवात् ॥ ३८ ॥ नाभेदो भेदरहितो भेदो वाऽभेदवर्जितः। केवलोऽस्ति

